दुर्गाष्टोत्तरशतनामस्तोत्रम् ( विश्वसारतन्त्र )

॥ ॐ ॥

॥ श्री दुर्गायै नमः ॥

## ॥ श्री दुर्गाष्टोत्तरशतनामस्तोत्रम् ॥

ईश्वर उवाच ।
शतनाम प्रवक्ष्यामि शृणुष्व कमलानने ।
यस्य प्रसादमात्रेण दुर्गा प्रीता भवेत् सती ॥ १॥

ॐ सती साध्वी भवप्रीता भवानी भवमोचनी ।
आर्या दुर्गा जया चाद्या त्रिनेत्रा शूलधारिणी ॥ २॥

पिनाकधारिणी चित्रा चण्डघण्टा महातपाः ।
मनो बुद्धिरहंकारा चित्तरूपा चिता चितिः ॥ ३॥

सर्वमन्त्रमयी सत्ता सत्यानन्दस्वरूपिणी ।
अनन्ता भाविनी भाव्या भव्याभव्या सदागतिः ॥ ४॥

शाम्भवी देवमाता च चिन्ता रत्नप्रिया सदा ।
सर्वविद्या दक्षकन्या दक्षयज्ञविनाशिनी ॥ ५॥

अपर्णानेकवर्णा च पाटला पाटलावती ।
पट्टाम्बर परीधाना कलमञ्जीररञ्जिनी ॥ ६॥

अमेयविक्रमा क्रुरा सुन्दरी सुरसुन्दरी ।
वनदुर्गा च मातङ्गी मतङ्गमुनिपूजिता ॥ ७॥

ब्राह्मी माहेश्वरी चैन्द्री कौमारी वैष्णवी तथा ।
चामुण्डा चैव वाराही लक्ष्मीश्च पुरुषाकृतिः ॥ ८॥

विमलोत्कर्षिणी ज्ञाना क्रिया नित्या च बुद्धिदा ।
बहुला बहुलप्रेमा सर्ववाहन वाहना ॥ ९॥

निशुम्भशुम्भहननी महिषासुरमर्दिनी ।
मधुकैटभहन्त्री च चण्डमुण्डविनाशिनी ॥ १०॥

सर्वासुरविनाशा च सर्वदानवघातिनी ।
सर्वशास्त्रमयी सत्या सर्वास्त्रधारिणी तथा ॥ ११॥

अनेकशस्त्रहस्ता च अनेकास्त्रस्य धारिणी ।
कुमारी चैककन्या च कैशोरी युवती यतिः ॥ १२॥

अप्रौढा चैव प्रौढा च वृद्धमाता बलप्रदा ।
महोदरी मुक्तकेशी घोररूपा महाबला ॥ १३॥

अग्निज्वाला रौद्रमुखी कालरात्रिस्तपस्विनी ।
नारायणी भद्रकाली विष्णुमाया जलोदरी ॥ १४॥

शिवदूती कराली च अनन्ता परमेश्वरी ।
कात्यायनी च सावित्री प्रत्यक्षा ब्रह्मवादिनी ॥ १५॥

य इदं प्रपठेन्नित्यं दुर्गानामशताष्टकम् ।
नासाध्यं विद्यते देवि त्रिषु लोकेषु पार्वति ॥ १६॥

धनं धान्यं सुतं जायां हयं हस्तिनमेव च ।
चतुर्वर्गं तथा चान्ते लभेन्मुक्तिं च शाश्वतीम् ॥ १७॥

कुमारीं पूजयित्वा तु ध्यात्वा देवीं सुरेश्वरीम् ।
पूजयेत् परया भक्त्या पठेन्नामशताष्टकम् ॥ १८॥

तस्य सिद्धिर्भवेद् देवि सर्वैः सुरवरैरपि ।
राजानो दासतां यान्ति राज्यश्रियमवाप्नुयात् ॥ १९॥

गोरोचनालक्तककुङ्कुमेव सिन्धूरकर्पूरमधुत्रयेण ।
विलिख्य यन्त्रं विधिना विधिज्ञो भवेत् सदा धारयते पुरारिः ॥ २०॥

भौमावास्यानिशामग्रे चन्द्रे शतभिषां गते ।
विलिख्य प्रपठेत् स्तोत्रं स भवेत् सम्पदां पदम् ॥ २१॥

॥ इति श्री विश्वसारतन्त्रे दुर्गाष्टोत्तरशतनामस्तोत्रं समाप्तम् ॥

॥ श्रीदुर्गाष्टोत्तर शतनामस्तोत्र २ ॥

॥ॐ श्री दुर्गा परमेश्वर्यै नमः ॥

अस्यश्री दुर्गाष्टोत्तर शतनामास्तोत्र मालामन्त्रस्य
महाविष्णु महेश्वराः ऋषयः,
अनुष्टुप्छन्दः, श्रीदुर्गापरमेश्वरी देवता,
ह्रां बीजं, ह्रीं शक्तिः, ह्रूं कीलकं,
सर्वाभीष्टसिध्यर्थे जपहोमार्चने विनियोगः ।
ॐ सत्या साध्या भवप्रीता भवानी भवमोचनी ।
आर्या दुर्गा जया चाध्या त्रिणेत्राशूलधारिणी ॥

पिनाकधारिणी चित्रा चंडघंटा महातपाः ।
मनो बुद्धि रहंकारा चिद्रूपा च चिदाकृतिः ॥

अनन्ता भाविनी भव्या ह्यभव्या च सदागतिः ।
शांभवी देवमाता च चिन्ता रत्नप्रिया तथा ॥

सर्वविद्या दक्षकन्या दक्षयज्ञविनाशिनी ।
अपर्णाऽनेकवर्णा च पाटला पाटलावती ॥

पट्टांबरपरीधाना कलमंजीररंजिनी ।
ईशानी च महाराज्ञी ह्यप्रमेयपराक्रमा ।
रुद्राणी क्रूररूपा च सुन्दरी सुरसुन्दरी ॥

वनदुर्गा च मातंगी मतंगमुनिकन्यका ।
ब्राम्ही माहेश्वरी चैन्द्री कौमारी वैष्णवी तथा ॥

चामुंडा चैव वाराही लक्ष्मीश्च पुरुषाकृतिः ।
विमला ज्ञानरूपा च क्रिया नित्या च बुद्धिदा ॥

बहुला बहुलप्रेमा महिषासुरमर्दिनी ।
मधुकैठभ हन्त्री च चंडमुंडविनाशिनी ॥

सर्वशास्त्रमयी चैव सर्वधानवघातिनी ।
अनेकशस्त्रहस्ता च सर्वशस्त्रास्त्रधारिणी ॥

भद्रकाली सदाकन्या कैशोरी युवतिर्यतिः ।

प्रौढाऽप्रौढा वृद्धमाता घोररूपा महोदरी ॥

बलप्रदा घोररूपा महोत्साहा महाबला ।
अग्निज्वाला रौद्रमुखी कालारात्री तपस्विनी ॥

नारायणी महादेवी विष्णुमाया शिवात्मिका ।
शिवदूती कराली च ह्यनन्ता परमेश्वरी ॥

कात्यायनी महाविद्या महामेधास्वरूपिणी ।
गौरी सरस्वती चैव सावित्री ब्रह्मवादिनी ।
सर्वतत्त्वैकनिलया वेदमन्त्रस्वरूपिणी ॥

इदं स्तोत्रं महादेव्याः नाम्नां अष्टोत्तरं शतम् ।
यः पठेत् प्रयतो नित्यं भक्तिभावेन चेतसा ।
शत्रुभ्यो न भयं तस्य तस्य शत्रुक्षयं भवेत् ।
सर्वदुःखदरिद्राच्च सुसुखं मुच्यते ध्रुवम् ॥

विद्यार्थी लभते विद्यां धनार्थी लभते धनम् ।
कन्यार्थी लभते कन्यां कन्या च लभते वरम् ॥

ऋणी ऋणात् विमुच्येत ह्यपुत्रो लभते सुतम् ।
रोगाद्विमुच्यते रोगी सुखमत्यन्तमश्नुते ॥

भूमिलाभो भवेत्तस्य सर्वत्र विजयी भवेत् ।
सर्वान्कामानवाप्नोति महादेवीप्रसादतः ॥

कुंकुमैः बिल्वपत्रैश्च सुगन्धैः रक्तपुष्पकैः ।
रक्तपत्रैर्विशेषेण पूजयन्भद्रमश्नुते ॥

॥ॐ तत्सत् ॥